(गिरिः) पर्वतके समान ( अ-चलः ) स्थिर (तस्थौ) खडा हुआ ।

## समास ।

इस पाठमें आये हुए समासोंका परिचय अब किया जाता है-

१ नागराजकरोपमः= नागानां राजा नागराजः । नागराजस्य करः नागराजकरः । नागराजकरस्य उपमा यस्य सः नागराजकरोपमः । ( हाथियोंमेंसे श्रेष्ठ हाथीकी सूंडकी उपमा है जिसको )

२ पीनस्कंधोरुबाहुः—स्कंधः च ऊरू च बाहू च स्कंधोरुबाहवः । पीनाः स्कंधोरुबाहवः यस्य सः पीनस्कंधोरुबाहुः ।— ( जिसके कंधे, ऊरु और बाहु विशाल हैं । )

३ मत्तनागेंद्रविक्रमः— नागानां इंद्रः नागेन्द्रः । मत्तः च असौ नागेन्द्रः च मत्तनागेन्द्रः । मत्तनागेन्द्रस्य विक्रमः इव विक्रमः यस्य । ( उन्मत्त गजराज के समान विक्रमी )

४ अशक्तः— न शक्तः ( शक्तिरहित )

५ दृढव्रतः— दृढं व्रतं यस्य सः ( दृढ नियमवाला )

इस पाठके श्लोकोंमें कई और भी समास हैं । सब यहां दिये नहीं हैं । जो दिये हैं उनको ही वारंवार पाठक पढें । वारंवार पढनेसे ही समासका तत्त्व समझनेका ज्ञान प्राप्त हो सकता है । इस लिये समासका विवरण जो संस्कृतमें दिया है उसको पाठक वारंवार पढें ।

## पाठ १६

गत दो पाठोंमें जो संस्कृत वाक्य दिये हैं उनके संधि बनाकर सरल संस्कृत वाक्य इस पाठमें देते हैं—

### संस्कृत—वाचन—पाठः ।

( १ )

मंथरा त्वयोध्यां पुरीं सर्वशृंगारैरुद्भासिताम्रुच्छ्रित-ध्वजमालिनीं दृष्ट्वा परं विस्मयमागता। साऽदूरस्थितां धात्रीं पप्रच्छ। धात्री तु हर्षेण विदीर्यमाणेव रामस्य यौवराज्याभिषेकवृत्तान्तं मंथराया आचचक्षे। श्रुत-मात्रेण तु धात्र्या वचनेन क्षिप्रममर्षिता कुब्जा मंथरा। क्रोधेन दह्यमानेव मंथरा पापदर्शिनी शयानामेव कैकेयीं गत्वेदानीमिदमब्रवीत्।

उत्तिष्ठ मूढे! शेषे किम्? भयमभिवर्तते त्वाम्। दशरथो यौवराज्ये राममभिषेक्ष्यति। साऽहमनलेन दह्यमानेवास्मि। तव हितार्थमागता। हे माहिषि! कथं त्वं राजधर्माणामुग्रत्वं नावबुध्यसे? तव भर्ता दशरथस्त्वय्यनर्थकं सान्त्वं प्रयुंजानोऽद्यैव कौस-ल्यामर्थेनैव योजयिष्यति। ते भरतं बंधुष्वपनाह्य श्वः प्रभाते रामं निष्कंटके राज्ये स्थापयिता।

हे कैकेयि! सा त्वमात्मनो हितं कुर्विदानीम्। त्रायस्वात्मानं पुत्रं भरतं मां च। हर्षपूर्णा शयना-

दुत्थिता कैकेयीदमब्रवीत्। मंथरे! इदं तु मह्यं त्वया परमं प्रियमाख्यातम्। नाहं रामे वा भरते वा विशेषमुपलक्षये।

मंथरा तु तदा दुःखिता। एनां कैकेयीमुवाच च। बालिशे! किमर्थमस्थाने हर्षं कृतवत्यसि? शोकसागरस्य मध्यगतामप्यात्मानं नावबुध्यसे। सुभगा किल कौसल्या, यस्याः पुत्रो यौवराज्येऽभिषेक्ष्यते। तामेव कौसल्यामिदानीं दासीवत्त्वमुपस्थास्यसि। ते पुत्रोऽपि रामस्य दास्यं कुर्यात्।

( २ )

अब पूर्व पाठके श्लोकोंके अन्वयका संधियुक्त संस्कृत देखिये—

केचिदाहुर्युवा श्रीमान्नागराजकरोपमः पीनस्कंधोरुबाहुर्धैर्येण हिमवानिव सिंहखेलगतिर्मत्तनागेन्द्रविक्रमः। उत्साहादनुमीयते, इदं कर्माऽस्मिन्संभाव्यम्।

अस्य महोत्साहा शक्तिः। ह्यशक्तः स्वयं न व्रजेत्। लोकेषु तत्किंचित्कर्म न विद्यते यत्संस्थानचारिषु तेषु ब्राह्मणानामसाध्यं भवेत्।

अब्भक्षा वायुभक्षाः फलाहारा दृढव्रता दुर्बला अपि विप्रा हि स्वतेजसा बलीयांसः। सदसत् सुखं दुःखं महद्दुःखं यत्समुपागतं कर्म वा समाचरन् ब्राह्मणो नावमंतव्यः।

# पाठ ३७

जामदग्न्येन रामेण युधि क्षत्रिया निर्जिताः। ब्रह्मतेजसाऽगस्त्येनागाधः समुद्रः पीतस्तस्मात्सर्वेऽत्र ब्रुवन्त्वेष महान्बटुर्धनुः शीघ्रमारोपयतु वै । द्विजर्ष-भास्तथेत्यूचुः ।

विविधा गिर एवं विलपतां तेषां विप्राणामर्जुनो धनुष अभ्याशे गिरिरिवाचलस्तस्थौ ।

पूर्व स्थानके पाठोंका सरल संस्कृत यह है । इसमें संधि किये गये हैं। पाठक दोचार बार पढेंगे तो उनको यह भी समझमें आ जायगा । यदि किसी स्थानपर समझमें नहीं आया तो वे उस वाक्य को पूर्व पाठोंमें देखकर उसका अर्थ जान सकते हैं । अब थोडेसे संधि खोलकर बताये जाते हैं—

शृंगारैरुद्भासिता = शृंगारैः उद्भासिता ।
दह्यमानेव = दह्यमाना इव ।
गत्वेदानीं = गत्वा इदानीं ।
त्वय्यनर्थकं = त्वयि अनर्थकं ।
बंधुष्वपवाह्य = बंधुषु अपवाह्य ।
कैकेयीदमब्रवीत् = कैकेयी इदं अब्रवीत् ।
कृतवत्यसि = कृतवती असि ।
केचिदाहुः = केचित् आहुः ।

अब कुछ संस्कृत वाक्योंका अर्थ संस्कृतमेंही दिया जाता है-

## संस्कृत वाक्योंका संस्कृतमें अर्थ ।

१ साऽदूरस्थितां धात्रीं पप्रच्छ = सा समीपस्थां उपमातरं अपृच्छत् ।

२ उत्तिष्ठ मूढे = उत्तिष्ठ मूर्खे ।

३ साहमनलेन दह्यमानेवास्मि= सा अहं अग्निना ज्वालिता इव अस्मि ।

४ सा त्वमात्मनो हितं कुर्विदानीं = सा त्वं स्वकीयं मंगलं विधेहि अधुना ।

५ इदं तु सख्यं त्वया परमं प्रियमाख्यातं = एतत् तु सख्यं त्वया अत्यन्तं प्रीतिकरं कथितम् ।

६ शोकसागरस्य मध्यगतामप्यात्मानं नावबुध्यसे=दुःखसमुद्रस्य अंतर्गता अपि आत्मानं न जानासि ।

७ ते पुत्रोऽपि रामस्य दास्यं कुर्यात् = तव सुतः अपि रामचंद्रस्य सेवां कुर्यात् ।

इस प्रकार संस्कृतका अर्थ संस्कृतमें करनेसे आपका संस्कृत के साथ परिचय बहुत ही बढ जायगा । इसलिये पाठक इसको वारंवार पढें ।

## पाठ १८

अब इस पाठमें निम्नलिखित अकारान्त पुल्लिंग शब्दोंका अभ्यास कीजिये—

| | |
|---|---|
| व्यवहारः—व्यापार | दरिद्रः—दरिद्री, निर्धन |
| यवः—जौं | पुरुषः—पुरुष |
| उपयोगः—उपयोग | पुरुषोत्तमः—पुरुषोंमें उत्तम |
| अभियोगः—लगना, मुकदमा, युद्ध | प्रणयः—प्रीति, मित्रता |
| दिवाकरः—सूर्य | दम्भः—ढोंग |
| न्यासः—रखना | स्वेदः—पसीना |
| वत्सः—बछडा | कंटकः—कांटा |
| बालः—बालक | संस्कारः—संस्कार |
| गंधः—गंध, सुगंध | रसः—रस |
| स्पर्शः—स्पर्श | भेदः—भेद |
| संयोगः—संयोग | दीपः—दीप |

अकारन्त पुल्लिंग शब्दोंके सातों विभक्तियोंके रूप बनाना पाठक जानते ही हैं। अतः वे इन शब्दोंके रूप बनाकर विविध वाक्य बना सकते हैं।

## संस्कृतवाक्य ।

१ व्यवहारे कुशलः पुरुषः विजयं प्राप्नोति। २ सः दिने यवान् रात्रौ च व्रीहीन् भक्षयति। ३ यः बलस्य उपयोगं जानाति सः एव श्रेष्ठः भवति न अन्यः। ४ त्वया तेन सह किमर्थं अभियोगः कृतः? ५ राष्ट्रस्य उद्धाराय सर्वस्वस्य न्यासः कर्तव्यः एव। ६ स बालः भूत्वा वृद्धः इव वदति। ७ तं गोवत्सं इदानीं अत्र आनय। ८ तस्य पुष्पस्य गंधः शोभनः अस्ति। ९ यदा पिता बालकं पश्यति तदा सुखी भवति। १० एष पूर्वमार्गेण सह पश्चिममार्गस्य संयोगः अस्ति। ११ दरिद्रः पुरुषः धनहीनः भवति।

## भाषावाक्य ।

१ व्यवहारमें कुशल मनुष्य विजय प्राप्त करता है। २ वह दिनमें जौं और रात्रीमें चावल खाता है। ३ जो बल-का उपयोग जानता है वही श्रेष्ठ होता है, दूसरा नहीं। ४ तूने उससे किस लिये युद्ध किया? ५ राष्ट्रके उद्धारके लिये सर्वस्वका दान करनाहीं चाहिये। ६ वह बालक होकर भी वृद्धके समान बोलता है। ७ उस गोवत्सको अब यहां ला। ८ उस फूलका गंध उत्तम है। ९ जब पिता बालकको देखता है तब सुखी होता है। १० यह पूर्वमार्गके साथ पश्चिममार्ग का संयोग है। ११ दरिद्र मनुष्य धनहीन होता है।

# पाठ १९

## संस्कृत वाक्य ।

१ पुरुषस्य भाग्यं देवः न जानाति कुतः मनुष्यः ? २ पुरुषः पुरुषोत्तमस्य उपासनां करोतु । ३ दंभेन मनुष्यस्य अधःपातः भवति । ४ ग्रीष्मकाले मनुष्यस्य शरीरात् स्वेदः निःसरति । ५ यदि वृक्षस्य कंटकः पादे प्रविशति तर्हि कंटकेन एव सः बहिः निःसार्यः । ६ संस्कारेण हीनः शूद्रः । संस्कारेण एव द्विजः भवति । ७ फलानां मधुरः रसः एव पेयः । ८ भेद एव युद्धस्य मूलं अस्ति । ९ अन्धकारे दीपः एव मार्गं दर्शयति । १० अन्नस्यार्धभागं शूद्राय स ददाति ।

## भाषा वाक्य ।

१ पुरुषका भाग्य देव नहीं जानता, कैसे मनुष्य जानेगा ? २ पुरुष पुरुषश्रेष्ठकी उपासना करे ! ३ ढोंगसे मनुष्यका अधःपात होता है । ४ ग्रीष्म कालमें मनुष्यके शरीरसे पसीना निकलता है । ५ यदि वृक्षका कांटा पांवमें प्रवेश करता है, तो कांटेसेही वह बाहर निकालने योग्य है । ६ संस्कारसे हीन शूद्र । संस्कारसेही द्विज होता है । ७ फलोंका मधुर रसही पीने योग्य है । ८ भेदही लडाईका मूल है । ९ अंधकारमें दीपही मार्ग बताता है । १० अन्नका आधा भाग शूद्रको वह देता है ।

## संस्कृत—वाचन—पाठः ।

यथा शूद्रः अन्नं खादति तथा एव इतरः जनः भोजनं करोति । गांधारी दुर्योधनं पुत्रं अजनयत् । कुंती च युधिष्ठिरं पुत्रं अजनयत् । राजा सैनिकान् दूरतः विसृज्य आश्रमं गच्छति । तस्य शब्दं श्रुत्वा राक्षसी तत्र एव आगता । पूजितः मुनिः इदं वचनं अब्रवीत् यत् सत्यं एव परमः धर्मः इति । सा कन्या तस्मिन् एव आश्रमे विद्याध्ययनादिकं समाप्य स्वगृहं आगता । तेन राज्ञा तस्मै जनाय धनं दत्तं, तत् धनं गृहीत्वा सः देशान्तरं गतः तत्र विद्याध्ययनं कर्तुम् । ज्ञानात् एव बन्धनात् मुक्तिः भवति, तथा कर्मकरणात् अपि भवति ।

## संधि किये हुए वाक्य ।

यथा शूद्रोऽन्नं खादति तथैवेतरो जनो भोजनं करोति । गांधारी दुर्योधनं पुत्रमजनयत् । कुन्ती च युधिष्ठिरं पुत्रमजनयत् । राजा सैनिकान्दूरतो विसृज्याश्रमं गच्छति । तस्य शब्दं श्रुत्वा राक्षसी तत्रैवागता । पूजितो मुनिरिदं वचनमब्रवीद्यत्सत्यमेव परमो धर्म इति । सा कन्या तस्मिन्नेवाश्रमे विद्याध्ययनादिकं समाप्य स्वगृहमागता ।

## पाठ २०

### संस्कृत वाक्य ।

१ एवं तु उक्ता कैकेयी क्रुद्धा बभूव । अब्रवीत् च मंथराम् । रामं वनं अद्य क्षिप्रं प्रस्थापयामि । २ भरतं एव यौवराज्ये अभिषेचये । एतत् तु संपश्य केनापि उपायेन साधयेदम् । ३ पापदर्शिनी मंथरा अपि रामार्थं उपहसन्ती कैकेयीं अब्रवीत् । हन्त इदानीं पश्य यथा ते भरतः राज्यं प्राप्स्यति । ४ पुरा देवासुरयुद्धे ते पतिः देवराजस्य साहाय्यं अकरोत् । ५ तदा त्वां एव उपादाय गत आसीत् । ६ शम्बरासुरेण तत्र राजा महायुद्धं अकरोत् ।

### भाषा वाक्य ।

१ इस प्रकार कहने पर कैकयी क्रुद्ध होगई । और बोली मंथराको । रामको वनमें आज शीघ्र भेजूंगी । २ भरत को ही यौवराज्यपर अभिषेक करूंगी । यह तो देखकर किसी उपाय से यह सिद्ध कर । ३ पापी मंथरा भी रामके कारण उपहास करनेवाली कैकेयीसे बोली । अजी अब देख कैसा तेरा भरत राज्य प्राप्त करेगा । ४ प्राचीन समयमें देव और असुरों के युद्धमें तेरा पति देवराजकी सहाय्यता करता रहा । ५ तुझे ही लेकर गया था । ६ शंबरासुरसे वहां राजाने बडा युद्ध किया ।

## संस्कृतवाक्य ।

७ यदा असुरैः शस्त्रैः शकलीकृतः राजा अभवत् तदा त्वया एव तत्र रक्षितः । ८ तुष्टेन तदा तेन राज्ञा द्वौ वरौ ते दत्तौ । ९ सः च त्वया उक्तः । यदा इच्छेयं तदा गृह्णीयां इति । १० याचस्व अधुना तौ वरौ । भरतस्य अभिषेचनं रामस्य प्रव्राजनं वर्षाणि चतुर्दश, इतिरूपौ द्वौ वरौ । ११ तावता हि कालेन स्थिरो भविष्यति पुत्रः ते प्रजाभावगतस्नेहः १२ पश्चात् कैकेयी एवं प्रोत्साहिता आभरणानि मुक्त्वा क्रोधागारं प्रविश्य भूमौ एव निपातिता ।

## भाषा-वाक्य ।

७ असुरोंने शस्त्रोंसे राजा जर्जरित किया तब तूने ही वहां रक्षित किया । ८ संतुष्ट हुए उस राजाने दो वर तेरे लिये दिये । ९ उसे तुमने कहा । कि जब इच्छा करूंगी तब लूंगी । १० मांग अब वे दो वर । भरतका राज्याभिषेक और रामको बाहर भेजना चौदह वर्ष, ये दो वर । ११ उतने ही समयसे स्थिर हो जायगा पुत्र तेरा प्रजाके स्नेहसे । १२ पश्चात् कैकेयी इस प्रकार प्रोत्साहित होकर आभूषण फेंक कर क्रोधागारमें प्रविष्ट हो, भूमीपरही पडी रही ।

# पाठ २१

## संस्कृत-वाक्य ।

१ महाराजः दशरथः प्रियार्हां प्रियं आख्यातुं कैकेय्याः अंतःपुरं प्रविवेश । २ शयनोत्तमे तां न ददर्श सः । न हि तस्य तां वेलां देवी पुरा अत्यवर्तत । ३ प्रतिहारी तु कृताञ्जलिः उवाच । देव ! देवी भृशं क्रुद्धा अभिद्रुता क्रोधागारम् । ४ अपापः राजा पापसंकल्पां तां कैकेयीं धरणीतले ददर्श । ५ स तां उवाच, किमर्थं भूमौ शेषे ? ६ कैकेयी उवाच— प्रतिजानीष्व प्रतिज्ञां यदि कर्तुं इच्छसि ।

## भाषा-वाक्य ।

१ महाराज दशरथ प्रियके लिये योग्य कैकेयीको प्रिय ( आख्यातुं ) कहनेके लिये कैकेयी के अंतःपुरमें प्रविष्ट हुआ । २ शयनके लिये उत्तम मंदिरमें उसे नहीं देखा उसने । उसके उस समय का देवी पहिले अतिक्रमण नहीं करती थी । ३ प्रतिहारी तो हाथ जोडकर बोली, हे ( देव ) राजा ! देवी बहुत क्रोधित हुई है और ( अभिद्रुता ) गई है क्रोधशालामें । ४ निष्पाप राजाने पापसंकल्पा उस कैकेयी को भूमिके ऊपर पडी देखी । ५ वह उसे बोला, किसलिये भूमीपर सोती है ? ६ कैकेयी बोली- ( प्रतिजानीष्व ) प्रतिज्ञा कर, यदि प्रतिज्ञा पूर्ण करना चाहता है ।

७ अनंतरं ते व्याहरिष्यामि यथा मम अभिप्रार्थितम् । [ ७ पश्चात् तुझे कहूंगी जैसी मेरी इच्छा है । ]

समास ।

१ देवासुरयुद्धं= देवाः च असुराः च देवासुराः । देवासुराणां युद्धं देवासुरयुद्धं ( देव और असुरोंका युद्ध )

२ देवराजः= देवानां राजा देवराजः ( देवों का राजा )

३ शंबरासुरः= शंबरः च असौ असुरः च शंबरासुरः ( शंबर नामक असुर )

४ क्रोधागारं = क्रोधस्य अगारं क्रोधागारं ( क्रोधभवन )

५ प्रजाभावगतस्नेहः = प्रजायाः भावः प्रजाभावः । प्रजाभावे गतस्नेहः । ( प्रजाभावमें प्राप्त स्नेहसे युक्त )

६ शयनोत्तमं = शयनाय उत्तमं ( शयनके लिए उत्तम )

७ कृतांजलिः = कृता अंजलिः येन सः कृताञ्जलिः ( हाथ जोडे हुए )

इस रीतिसे पाठक समासोंका ज्ञान प्राप्त करें ।

## पाठ २२

स तद्धनुः परिक्रम्य प्रदक्षिणमथाकरोत् ॥ १७ ॥
प्रणम्य शिरसा देवमीशानं वरदं प्रभुम् ।
कृष्णं च मनसा ध्यात्वा जगृहे चार्जुनो धनुः ॥१८॥

म० भा० आदि० अ० १९०

अन्वयः– अथ सः तत् धनुः परिक्रम्य प्रदक्षिणं अकरोत् । शिरसा देवं ईशानं वरदं प्रभुं प्रणम्य । मनसा कृष्णं च ध्यात्वा अर्जुनः धनुः जगृहे ।

अर्थ—अब उसने उस धनुष्यके ( परिक्रम्य ) चारों ओर परिक्रमा की । शिरसे देव ईश्वर वरदाता प्रभुको प्रणाम कर और मनसे कृष्णका ध्यान करके अर्जुनने धनुष्यको ( जगृहे ) लिया, पकडा ।

चैलानि विव्यधुस्तत्र ब्राह्मणाश्च सहस्रशः ।
विलक्षितास्ततश्चक्रुर्हाहाकारांश्च सर्वशः ॥ २३ ॥

अन्वयः– सहस्रशः ब्राह्मणाः तत्र चैलानि विव्यधुः ततः विलक्षिताः सर्वशः हाहाकारान् च चक्रुः ।

अर्थ– सहस्रों ब्राह्मण वहां अपने ( चैलानि ) दुपट्टों को ( विव्यधुः ) उडाने लगे । उससे ( विलक्षिताः ) विलक्षण अर्थात् जो वैसा कर नहीं सके थे, वे सब प्रकारसे हाय हाय ( चक्रुः ) करने लगे ।

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



न्यपतंश्चात्र नभसः समन्तात्पुष्पवृष्टयः ।
शताङ्गानि च तूर्याणि वादकाः समवादयन् ॥२४॥

अन्वयः– अत्र च नभसः समन्तात् पुष्पवृष्टयः न्यपतन् । वादकाः शतांगानि च तूर्याणि समवादयन् ।

अर्थ— यहां ( नभसः ) आकाशसे ( समन्तात् ) चारों ओर से फूल की वृष्टि ( न्यपतन् ) पडने लगी अर्थात् हो गई । बाजेवाले सैंकडों अंगोंसे युक्त ( तूर्य ) ढोल आदि वाद्य ( समवादयन् ) बजाने लगे ।

सूतमागधसंघाश्चाऽप्यस्तुवंस्तत्र सुस्वराः ।
तं दृष्ट्वा द्रुपदः प्रीतो बभूव रिपुसूदनः ।
सह सैन्यैश्च पार्थस्य साहाय्यार्थमियेष सः ॥२५॥

अन्वयः–अत्र सूतमागधसंघाः च अपि सुस्वराः अस्तुवन् । तं दृष्ट्वा रिपुसूदनः द्रुपदः प्रीतः बभूव । सैन्यैः च सह सः पार्थस्य साहाय्यार्थं इयेष ।

अर्थ–यहां सूत और मागधोंके संघ सुस्वरसे ( अस्तुवन् ) स्तुति करने लगे । उसे देखकर ( रिपुसूदनः ) शत्रुनाशी द्रुपद ( प्रीतः ) संतुष्ट हुआ । सैन्योंके साथ उसने ( पार्थस्य ) अर्जुनकी सहायता करनेकी ( इयेष ) इच्छा की ।

तस्मै दित्सति कन्यां तु ब्राह्मणाय तदा नृपे ।
कोप आसीन्महीपानामालोक्यान्योन्यमन्तिकात् ।
म० भा० आदि० १९१ । १

अन्वयः— तदा तस्मै ब्राह्मणाय कन्यां दित्सति नृपे अन्योन्यं आलोक्य महीपानां क्रोधः आसीत् ।

अर्थ—तब उस ब्राह्मणको कन्या ( दित्सति ) दान करने की ( नृपे ) राजाकी इच्छा जानकर, परस्परको ( आलोक्य ) देखकर ( मही-पानां ) राजाओंका क्रोध ( आसीत् ) था, हो गया । अर्थात् राजे बडे क्रुद्ध हुए ।

अस्मानयमतिक्रम्य तृणीकृत्य च सङ्गतान् ।
दातुमिच्छति विप्राय द्रौपदीं योषितां वराम् ॥२॥

अन्वयः— अस्मान् संगतान् तृणीकृत्य अतिक्रम्य च अयं योषितां वरां द्रौपदीं विप्राय दातुं इच्छति ।

अर्थ— हम ( संगतान् ) मिले हुओंको तिनके के समान समझकर और ( अतिक्रम्य च ) उल्लंघन करके ( अयं ) यह ( योषितां ) स्त्रियोंमें ( वरां ) श्रेष्ठ द्रौपदीको ( विप्राय ) ब्राह्मणको देनेकी इच्छा करता है ।

अवरोप्येह वृक्षं तु फलकाले निपात्यते ।
निहन्मैनं दुरात्मानं योऽयमस्मान्न मन्यते ॥ ३ ॥

अन्वयः—इह वृक्षं अवरोप्य तु फलकाले निपात्यते । यः अस्मान् न मन्यते । एनं दुरात्मानं निहन्म ।

अर्थ—यहां वृक्षका रोपण करके फलने के कालमें ( निपात्यते ) काट रहा है । जो हमको नहीं मानता, इस दुरात्मा को ( निहन्म ) मार डालेंगे ।

## समास ।

१ वरदः—वरं ददाति इति । ( वर देनेवाला )
२ पुष्पवृष्टिः—पुष्पाणां वृष्टिः । ( फूलोंकी वृष्टि )
३ शताङ्ग—शतानि अङ्गानि यस्य ।(सौ अङ्ग हैं जिसके)
४ वादकः—वादयति इति । ( जो बजाता है )
५ सूतमागधसंघाः— सूताः च मागधाः च सूतमागधाः । सूतमागधानां संघाः सूतमागधसंघाः ।
( सूत और मागधोंके संघ )
६ रिपुसूदनः = रिपोः सूदनः ( शत्रुका घातक )
७ महीपः = महीं पाति इति । ( पृथ्वीका पालक )
८ फलकालः = फलस्य कालः । ( फलका समय )
९ दुरात्मा = दुष्टः आत्मा यस्य । ( दुष्ट है आत्मा जिसका )

पाठक ये समासके विवरण वारंवार पढके ठीक समझनेका यत्न करें ।

## संधि किये वाक्य ।

अथ स तद्धनुः परिक्रम्य प्रदक्षिणमकरोत । शिरसेशानं वरदं प्रभुं प्रणम्य, मनसा कृष्णं च ध्यात्वा, अर्जुनो धनुर्जगृहे । सहस्रशो ब्राह्मणास्तत्र चैलानि विव्यधुः । ततो विलक्षिताश्च सर्वशो हाहाकाराश्चक्रुः ।

# पाठ २३

पूर्व तीन पाठोंमें जो संस्कृत के वाक्य दिये हैं, उनका संधियुक्त सरल संस्कृत अब दिया जाता है—

एवं तूक्ता कैकेयी क्रुद्धा बभूव। अब्रवीच्च मंथराम्। रामं वनमद्य क्षिप्रं प्रस्थापयामि। भरतमेव यौवराज्येऽभिषेचये। एतत्तु संपश्य केनोपायेन साधयेदम्।

पापदर्शिनी मंथराऽपि रामार्थमुपहसन्तीं कैकेयीमब्रवीत्। हन्तेदानीं पश्य यथा ते भरतो राज्यं प्राप्स्यति।

पुरा देवासुरयुद्धे ते पतिर्देवराजस्य साहाय्यमकरोत्। तदा त्वामेवोपादाय गत आसीत्। शंबरासुरेण तत्र राजा महायुद्धमकरोत्। यदासुरैः शस्त्रैः शकलीकृतो राजाभवत्तदा त्वयैव तत्र रक्षितः। तुष्टेन तदा तेन राज्ञा द्वौ वरौ ते दत्तौ। स च त्वयोक्तः। यदेच्छेयं तदा गृह्णीयामिति। याचस्वाधुना तौ वरौ। भरतस्याभिषेचनं रामस्य प्रव्राजनं वर्षाणि चतुर्दशेतिरूपौ द्वौ वरौ। तावता हि कालेन स्थिरो भविष्यति पुत्रस्ते प्रजाभावगतस्नेहः।

पश्चात्कैकेय्येवं प्रोत्साहिताऽऽभरणानि मुक्त्वा क्रोधागारं प्रविश्य भूमावेव निपतिता।

महाराजो दशरथः प्रियार्हां प्रियमाख्यातुं कैकेय्या अंतःपुरं प्रविवेश। शयनोत्तमे तां न ददर्श सः। नहि तस्य तां वेलां देवी पुराऽत्यवर्तत।

प्रतिहारी तु कृताञ्जलिरुवाच। देव! देवी भृशं क्रुद्धा अभिद्रुता क्रोधागारम्।

अपापो राजा पापसंकल्पां तां कैकेयीं धरणीतले ददर्श। स तामुवाच। किमर्थं भूमौ शेषे?

कैकेय्युवाच- प्रतिजानीष्व प्रतिज्ञां यदि कर्तुमिच्छसि। अनन्तरं ते व्याहरिष्यामि यथा समाभिप्रार्थितम्। इति।

अब श्लोकोंके पाठका संधियुक्त सरल संस्कृत देखिये—

अथ स तद्धनुः परिक्रम्य प्रदक्षिणमकरोत्। शिरसा देवमीशानं वरदं प्रभुं प्रणम्य मनसा कृष्णं च ध्यात्वाऽर्जुनो धनुर्जगृहे। तदा सहस्रशो ब्राह्मणास्तत्र चैलानि विव्यधुः। ततो विलक्षिताः सर्वशो हाहाकारांश्च चक्रुः।

अत्र च नभसः समन्तात्पुष्पवृष्टयो न्यपतन्। वादकाः शतांगानि च तूर्याणि समवादयन्।

अत्र सूतमागधसंघाश्चापि सुस्वरा अस्तुवन्। तं दृष्ट्वा रिपुदमनो द्रुपदः प्रीतो बभूव। सैन्यैश्च सह स पार्थस्य साहाय्यार्थमियेष।

*

# पाठ २४

तदा तस्मै ब्राह्मणाय कन्यां दित्सति नृपेऽन्योन्यमालोक्य महीपानां क्रोध आसीत्। अस्मान्संगतांस्तृणीकृत्यातिक्रम्य चायं योषितां वरां द्रौपदीं विप्राय दातुमिच्छति। इह वृक्षमवरोप्य तु फलकाले निपात्यते। योऽस्मान्न मन्यते। एनं दुरात्मानं निहन्म।

## संधि।

अब इस पाठके कुछ संधियोंको खोल कर बताया जाता है—

अब्रवीच्च = अब्रवीत् च।

यौवराज्येऽभिषे०—यौवराज्ये अभिषे०।

केनोपायेन—केन उपायेन।

पतिर्देवराजस्य—पतिः देवराजस्य।

त्वामेवोपादाय—त्वां एव उप+आदाय।

यदेच्छेयं—यदा इच्छेयं।

शयनोत्तमे—शयन+उत्तमे।

अपापो राजा—अपापः राजा।

कैकेय्युवाच—कैकेयी उवाच।

अब संस्कृतका अर्थ संस्कृतमेंही दिया जाता है। इसका अभ्यास पाठक अच्छी प्रकार करें—

१ रामं वनमद्य क्षिप्रं प्रस्थापयामि = रामचन्द्रं अरण्यं अस्मिन्दिने शीघ्रं प्रेषयिष्यामि।

२ हन्तेदानीं पश्य यथा ते भरतो राज्यं प्राप्स्यति=

शोभनं अधुना अवलोकय येन उपायेन तव भरतः राज्यं अवाप्स्यति ।

३ पुरा देवासुरयुद्धे ते पतिः देवराजस्य साहाय्यमकरोत्=पूर्वं सुरासुरसंग्रामे तव भर्ता सुरपतेः सहायतां कृतवान् ।

४ तदा त्वामेवोपादाय गत आसीत्=तस्मिन् समये त्वां गृहीत्वा एव स गतवान् ।

५ तुष्टेन तदा तेन राज्ञा द्वौ वरौ ते दत्तौ=संतोषितेन तस्मिन्समये तेन भूपेन द्वौ वरौ तुभ्यं दत्तौ ।

६ मनसा कृष्णं ध्यात्वार्जुनो=धनुर्जगृहेहृदयेन वासुदेवं ध्यात्वा पार्थः धनुष्यं गृहीतवान् ।

पाठक इसका अच्छा अभ्यास करें ।

## संधि किये वाक्य ।

रामचन्द्रमरण्यमस्मिन्दिने शीघ्रं प्रेषयिष्यामि । शोभनमधुनावलोकय येनोपायेन तव भरतो राज्यमवाप्स्यति । पूर्वं सुरासुरसंग्रामे तव भर्ता सुरपतेः सहायतां कृतवांस्तस्मिन्समये त्वां गृहीत्वैव स ग तवान् ।

## पाठ २५

### संजय उवाच ।

वर्तमाने तथा युद्धे क्षत्रियाणां निमज्जने ।
गाण्डीवस्य महाघोषः श्रूयते युधि मारिष ॥ १ ॥

म० भा० कर्णपर्व अ० ५३

अन्वयः-हे मारिष ! तथा क्षत्रियाणां निमज्जने युद्धे वर्तमाने युधि गाण्डीवस्य महाघोषः श्रूयते ।

अर्थ— हे धृतराष्ट्र ! उस प्रकार क्षत्रियोंका नाश करने वाला युद्ध सुरू होनेके पश्चात् उस युद्धमें गाण्डीव धनुष्यका बडा शब्द सुनाई दिया ।

संशप्तकानां कदनमकरोद्यत्र पाण्डवः ।
कोसलानां तथा राजन्नारायणबलस्य च ॥ २ ॥

अन्वयः-हे राजन् ! यत्र पाण्डवः संशप्तकानां कोसलानां तथा नारायणबलस्य च कदनं अकरोत् ।

अर्थ— हे राजा ! जहां पाण्डव अर्जुन संशप्तक सैन्य, कोसल सेना और नारायणीय दलका नाश करता था ।

संशप्तकास्तु समरे शरवृष्टीः समन्ततः ।
अपातयन्पार्थमूर्ध्नि जयगृद्धाः प्रमन्यवः ॥ ३ ॥

अन्वयः- जयगृद्धाः प्रमन्यवः संशप्तकाः तु समरे पार्थमूर्ध्नि शरवृष्टीः अपातयन् ।

अर्थ— विजयप्राप्तीकी इच्छा करनेवाले क्रोधसे भरे संशप्तकवीर तो उस युद्धमें पृथापुत्र अर्जुनके सिरपर बाणोंकी वृष्टि करने लगे ।

ता वृष्टीः सहसा राजंस्तरसा धारयन्प्रभुः ।
व्यगाहत रणे पार्थो विनिघ्नन्रथिनां वरान् ॥ ४ ॥

अन्वयः—हे राजन् ! सहसा ताः वृष्टीः धारयन् तरसा च रथिनां वरान् विनिघ्नन् प्रभुः रणे व्यगाहत ।

अर्थ—हे राजन् ! साहससे उस बाणवृष्टिका धारण करता हुआ और रथियोंमें श्रेष्ठ शत्रुके वीरोंको मारता हुआ वीर पार्थ अर्जुन युद्धमें घूमने लगा ।

विगाह्य तद्रथानीकं कङ्कपत्रैः शिलाशितैः ।
आससाद ततः पार्थः सुशर्माणं वरायुधम् ॥ ५ ॥

अन्वयः—तत् रथानीकं विगाह्य, ततः पार्थः वरायुधं सुशर्माणं शिलाशितैः कङ्कपत्रैः आससाद ।

अर्थ— उस रथसेनामें प्रविष्ट होकर, पश्चात् पृथापुत्र अर्जुन उत्तम आयुधोंको धारण करनेवाले सुशर्माके साथ शिलापर घिसे कंकपत्र बाणोंसे युद्ध करनेके लिये गये ।

स तस्य शरवर्षाणि ववर्ष रथिनां वरः ।
तथा संशप्तकाश्चैव पार्थे बाणैः समार्पयन् ॥ ६ ॥

अन्वयः- स रथिनां वरः तस्य शरवर्षाणि ववर्ष, तथा संशप्तकाः च एव पार्थं बाणैः समार्पयन् ।

अर्थ—उस रथियोंमें श्रेष्ठने उसपर बाणोंकी वृष्टि की तथ संशप्तक वीरोंने भी अर्जुनपर बाण चलाना आरंभ किया ।

सुशर्मा तु ततः पार्थं विध्वा दशभिराशुगैः ।
जनार्दनं त्रिभिर्बाणैरहनद्दक्षिणे भुजे ॥ ७ ॥

अन्वयः--ततः सुशर्मा तु पार्थं दशभिः आशुगैः विध्वा जनार्दनं दक्षिणे भुजे त्रिभिः बाणैः अहनत् ।

अर्थ- पश्चात सुशर्माने तो अर्जुनपर दश बाण मारकर, श्रीकृष्णको दक्षिण भुजापर तीन बाण मारे ।

ततोऽपरेण भल्लेन केतुं विव्याध मारिष ।
स वानरवरो राजन्विश्वकर्मकृतो महान् ॥ ८ ॥
ननाद सुमहानादं भीषयाणो जगर्ज च ।

अन्वयः-हे मारिष ! ततः अपरेण भल्लेन केतुं विव्याध, हे राजन् ! स महान् विश्वकर्मकृतः वानरवरः भीषयाणः सुमहानादं ननाद जगर्ज च ।

अर्थ— हे धृतराष्ट्र ! पश्चात् दूसरे भल्लबाणसे ध्वजाका वेध किया, हे राजन् ! तब वह बडा विश्वकर्माका बनाया वानरश्रेष्ठ डराता हुआ शब्द करने लगा और वेगसे गर्जने लगा ।

# पाठ २६

## संधि किये हुए वाक्य।

हे मारिष ! तथा क्षत्रियाणां निमज्जने युद्धे वर्तमाने युधि गाण्डीवस्य महाघोषः श्रूयते। हे राजन्! यत्र पाण्डवः संशप्तकानां कोसलानां तथा नारायणबलस्य च कदनमकरोत्। जयगृद्धाः समन्यवः संशप्तकास्तु समरे पार्थमूर्ध्नि शरवृष्टीरपातयन्। हे राजन्! सहसा ता वृष्टीर्धारयन्तरसा च रथिनां वरान्विनिघ्नन्प्रभुः पार्थो रणे व्यगाहत। तद्रथानीकं विगाह्य ततः पार्थो वरायुधं सुशर्माणं शिलाशितैः कङ्कपत्रैराससाद। स रथिनां वरस्तस्य शरवर्षाणि ववर्ष, तथा संशप्तकाश्चैव पार्थं बाणैः समार्पयन्। ततः सुशर्मा तु पार्थं दशभिराशुगैर्विध्वा, जनार्दनं दक्षिणे भुजे त्रिभिर्बाणैरहनत्। हे मारिष! ततोऽपरेण भल्लेन केतुं विव्याध, हे राजन्! महान्विश्वकर्मकृतो वानरवरो भीषयाणः सुमहानादं ननाद जगर्ज च ॥

### समास।

क्षत्रियः– क्षतात् त्रायते इति क्षत्रियः। ( दुःखसे मुक्त करनेवाले )

वर्तमान– वर्तते तत् वर्तमानं। ( जो है )

नारायणबलं–नारायणानां बलं। ( नारायणोंका बल )

जयगृद्धाः– जये गृद्धा जयगृद्धाः । ( जयकी इच्छा-वाले )

प्रमन्यवः–प्रकर्षेण मन्युः येषां ते प्रमन्यवः। ( बडे क्रोधवाले )

पार्थमूर्धा–पार्थस्य मूर्धा पार्थमूर्धा। (अर्जुनका सिर)

शरवृष्टिः–शराणां वृष्टिः शरवृष्टिः। ( बाणोंकी वृष्टि )

पार्थः–पृथायाः अपत्यं पुमान् पार्थः। (कुन्तीका पुत्र)

आशुगः — आशु गच्छतीत्याशुगः । ( शीघ्र चलनेवाला )

विश्वकर्मकृतः–विश्वकर्मणा कृतः विश्वकर्मकृतः। ( विश्वकर्मासे बनाया हुआ )

वानरवरः–वानरेषु वरः वानरवरः । (बन्दरोंमें श्रेष्ठ)

भीषयाणः– भीषयतेऽसौ भीषयाणः । ( भय देनेवाला )

सुमहानादं–महांश्च असौ नादश्च महानादः। शोभनः महानादः सुमहानादः। (अच्छा बडा नाद)

रथी–रथोऽस्यास्तीति । ( रथमें बैठनेवाला )

रथानीकं–रथानां अनीकं। ( रथसेना )

जनार्दनः—जनं (जन्म) अर्दयति इति । ( जन्मका नाश करनेवाला अर्थात् मुक्ति देनेवाला )

## पाठ २७

कपेस्तु निनदं श्रुत्वा सन्त्रस्ता तव वाहिनी ।
भयं विपुलमाधाय निश्चेष्टा समपद्यत ॥ ९ ॥

म० भा० कर्ण० अ. ५३

अन्वयः–कपेः तु निनदं श्रुत्वा तव वाहिनी संत्रस्ता विपुलं भयं आधाय निश्चेष्टा समपद्यत ।

अर्थ— वानर का घोर शब्द सुनकर तेरी सेना भयभीत होगयी । बहुत भय धारण करके चेतनारहित होगई ।

ततः सा शुशुभे सेना निश्चेष्टावस्थिता नृप ।
नानापुष्पसमाकीर्णं यथा चैत्ररथं वनम् ॥ १० ॥

अन्वयः—हे नृप ! ततः निश्चेष्टा अवस्थिता सा सेना शुशुभे, यथा नानापुष्पसमाकीर्णं चैत्ररथं वनम् ॥

अर्थ— हे राजा ! नंतर चेष्टारहित खडी हुई वह सेना वैसी शोभने लगी, जैसा नाना प्रकारके पुष्पोंसे युक्त चैत्ररथ नामक वन शोभायमान होता है ।

प्रतिलभ्य ततः संज्ञां योधास्ते कुरुसत्तम ।
अर्जुनं सिषिचुर्बाणैः पर्वतं जलदा इव ॥ ११ ॥

अन्वयः—हे कुरुसत्तम ! ततः ते योधाः संज्ञां प्रतिलभ्य बाणैः अर्जुनं सिषिचुः, जलदाः पर्वतं इव ।

अर्थ– हे कुरुश्रेष्ठ ! नंतर वे वीर चेतनाको प्राप्त करके बाणोंको अर्जुनपर वर्षाने लगे, जैसे मेघ पर्वतपर वृष्टि करते हैं ।

परिवव्रुस्ततः सर्वे पाण्डवस्य महारथम् ।
निगृह्य तं प्रचुक्रुशुर्वध्यमानाः शितैः शरैः ॥१२॥

अन्वयः– ततः सर्वे पाण्डवस्य महारथं परिवव्रुः । शितैः शरैः वध्यमानाः तं निगृह्य प्रचुक्रुशुः ।

अर्थ— पश्चात् सब वीरोंने अर्जुनके महारथको चारों ओरसे घेर लिया । तीक्ष्ण बाणोंसे पीड़ित होकर वे वीर उसको पकडकर कोलाहल करने लगे ।

ते हयान्रथचक्रे च रथेषां चापि मारिष ।
निग्रहीतुमुपाक्रामन्क्रोधाविष्टाः समन्ततः ॥१३॥

अन्वयः— हे मारिष ! ते क्रोधाविष्टाः हयान्, रथचक्रे च, रथेषां च अपि, समन्तात् निग्रहीतुं उपाक्रामन् ।

अर्थ— हे धृतराष्ट्र ! वे क्रोधसे युक्त होकर घोडोंको, रथके चक्रोंको, और धूरीको भी चारों ओरसे पकडने लगे ।

निगृह्य तं रथं तस्य योधास्ते तु सहस्रशः ।
निगृह्य बलवत्सर्वे सिंहनादमथानदन् ॥ १४ ॥

अन्वयः— ते तु सहस्रशः योधाः तस्य तं रथं निगृह्य, सर्वे बलवत् निगृह्य अथ सिंहनादं अनदन् ।

अर्थ—वे तो हजारहां वीर उसके उस रथको पकड कर, सब बलसे पकडकर पश्चात् सिंहनाद करने लगे।

अपरे जगृहुश्चैव केशवस्य महाभुजौ।
पार्थमन्ये महाराज रथस्थं जगृहुर्मुदा ॥ ५ ॥

अन्वयः—अपरे केशवस्य महाभुजौ जगृहतुः। हे महाराज ! अन्ये रथस्थं पार्थं मुदा जगृहतुः।

अर्थ—दूसरोंने केशवकी बडी भुजाओंको पकडा, हे महाराज ! अन्योंने रथमें रहनेवाले पृथापुत्र अर्जुनको आनंदसे पकड लिया।

केशवस्तु ततो बाहू विधुन्वन्रणमूर्धनि।
पातयामास तान्सर्वान्दुष्टहस्तीव हस्तिपान्॥१६॥

अन्वयः— केशवः तु ततः बाहू विधुन्वन् रणमूर्धनि तान् सर्वान् पातयामास दुष्टहस्ती हस्तिपान् इव।

अर्थ—केशवने तो पश्चात् बाहुओंको झटका देकर युद्धभूमिमें उन सबको गिरा दिया, जिस प्रकार दुष्ट हाथी माहुतोंको गिराता है।

# पाठ २८

## संधि किये हुए वाक्य ।

कपेस्तु निनदं श्रुत्वा तव वाहिनी सन्त्रस्ता। विपुलं भयमाधाय निश्चेष्टा समपद्यत। हे नृप! ततो निश्चेष्टावस्थिता सा सेना शुशुभे, यथा नानापुष्पसमाकीर्णं चैत्ररथं वनम्। हे कुरुसत्तम! ततस्ते योधाः संज्ञां प्रतिलभ्य बाणैरर्जुनं सिषिचुर्जलदाः पर्वतमिव। ततः सर्वे पाण्डवस्य महारथं परिवव्रुः। शितैः शरैर्वध्यमानास्तं निगृह्य प्रचुक्रुशुः। हे मारिष! ते क्रोधाविष्टा हयान्रथचक्रे च रथेषां चापि, समन्तान्निग्रहीतुमुपक्रामन। ते तु सहस्रशो योधास्तस्य तं रथं निगृह्य, सर्वे बलवन्निगृह्याथ सिंहनादमनदन्। अपरे केशवस्य महाभुजौ जगृहतुः। हे महाराज! अन्ये रथस्थं पार्थं मुदा जगृहतुः। केशवस्तु ततो बाहू विधुन्वन्रणमूर्धनि तान्सर्वान् पातयामास दुष्टहस्ती हस्तिपानिव॥

### समास।

सन्त्रस्ता- सम्यक्त्रस्ता संत्रस्ता। (बहुत पीडित)
निश्चेष्टा-निर्गता चेष्टा यस्याः सा निश्चेष्टा (चेष्टारहित)
नानापुष्पसमाकीर्ण- नानाविधैः पुष्पैः समाकीर्णम्
(अनेक जातिके पुष्पोंसे युक्त)

कुरुसत्तमः—अतिशयेन सन् सत्तमः, कुरुषु सत्तमः कुरुसत्तमः। (कुरुकुलोत्पन्न लोगोंमें अति उत्तम)

महारथः—महान् च असौ रथश्च महारथः। (बडा रथ)

जलदाः— जलं ददाति ते जलदाः। (मेघ)

सिंहनादः— सिंहवत् नादः सिंहनादः। (सिंहके समान शब्द)

क्रोधाविष्टाः— क्रोधेन आविष्टाः। (क्रोधयुक्त)

रणमूर्धनि— रणस्य मूर्धनि। (रणभूमिमें)

दुष्टहस्ती— दुष्टश्चासौ हस्ती च। (दुष्ट हाथी)

हस्तिपाः— हस्तिनः पांति ते। (हाथियोंके पालक)

संधि किये वाक्य।

जामदग्न्येन रामेण युधि क्षत्रिया निर्जिताः। ब्रह्मतेजसाऽगस्त्येनागाधः समुद्रः पीतः। तस्मात्सर्वेऽत्र ब्रुवन्तु "एष महान् धनुर्धनुः शीघ्रमारोपयतु वै"। द्विजर्षभास्तथेत्यूचुः।

तदा तस्मै ब्राह्मणाय कन्यां दित्सति नृपेऽन्योन्यमालोक्य महीपानां क्रोध आसीत्। अस्मान्संगतांस्तृणीकृत्यातिक्रम्य चायं योषितां वरां द्रौपदीं विप्राय दातुमिच्छति। इह वृक्षमवरोप्य तु फलकाले निपात्यते। योऽस्मान्न मन्यते। एनं दुरात्मानं निहन्मः।

धृतराष्ट्र उवाच ।

सुदुष्करमिदं कर्म कृतं भीमेन सञ्जय ।
येन कर्णो महाबाहू रथोपस्थे निपातितः ॥ १ ॥
कर्णो ह्येको रणे हन्ता पाण्डवान्सृञ्जयैः सह ।
इति दुर्योधनः सूत प्राब्रवीन्मां मुहुर्मुहुः ॥ २ ॥
पराजितं तु राधेयं दृष्ट्वा भीमेन संयुगे ।
ततः परं किमकरोत्पुत्रो दुर्योधनो मम ॥ ३ ॥

म० भा० कर्ण० अ० ५१

अन्वयः— हे सञ्जय ! इदं दुष्करं कर्म भीमेन कृतम् । येन महाबाहुः कर्णः रथोपस्थे निपातितः । हे सूत ! हि एकः कर्णः सृञ्जयैः सह पाण्डवान् हन्ता इति दुर्योधनः मां मुहुर्मुहुः प्र·अब्रवीत् । भीमेन संयुगे तु राधेयं पराजितं दृष्ट्वा ततः परं मम पुत्रः दुर्योधनः किं अकरोत् ?

अर्थ— हे संजय ! यह कठिन कर्म भीमने किया । जिसने महाबाहु कर्णको रथके उपस्थ भागमें गिरा दिया । हे सूत ! क्योंकि अकेला कर्णही सृञ्जयोंके सहित पाण्डवोंका नाश करनेवाला है, यह बात दुर्योधनने मुझे वारं कही थी । भीमने युद्धमें तो राधापुत्र कर्णको पराजित किया देखकर पश्चात् मेरे पुत्र दुर्योधनने क्या किया ?

# संस्कृत-पाठ-माला ।

चोवीस पुस्तकोंका मू० ६॥ ) और डा० व्य० ॥=) बारह पुस्तकों का मूल्य ४ ) और डा.व्य. ॥) प्रति भागका मूल्य ।=) छः आने और डा. व्य. -) एक आना। अत्यंत सुगम रीतिसे संस्कृत भाषाका अध्ययन करनेकी अपूर्व पद्धति ।

इस पद्धतिकी विशेषता यह है—

१ प्रथम द्वितीय और तृतीय भाग। इन भागोंमें संस्कृतके साथ साधारण परिचय करा दिया गया है।

२ चतुर्थ भाग। इस चतुर्थ भागमें संधिविचार बताया है।

३ पंचम और षष्ठ भाग। इन दो भागोंमें संस्कृतके साथ विशेष परिचय कराया है।

४ सप्तम से दशम भाग। इन चार भागोंमें पुलिंग, स्त्रीलिंग और नपुंसलिंगी नामोंके रूप बनानेकी विधि बताई है।

५ एकादश भाग। इस भागमें "सर्वनाम" के रूप बताये हैं।

६ द्वादश भाग। इस भागमें समासोंका विचार किया है।

७ तरहसे अठारहवें भाग तकके ६ भाग। इन छः भागोंमें क्रियापदविचार की पाठविधि बताई है।

८ उन्नीससे चौवीसवें भागतकके ६ भाग। इन छः भागोंमें वेदके साथ परिचय कराया है।

अर्थात् जो लोग इस पद्धतिसे अध्ययन करेंगे उनको अल्प परिश्रमसे बडा लाभ हो सकता है।

मंत्री-स्वाध्याय-मंडल, औंध ( जि० सातारा. )

---

मुद्रक तथा प्रकाशक—श्री० दा० सातवळेकर,
भारत-मुद्रणालय, औंध, ( जि० सातारा. )